## सर्प स्तम्भन मंत्र

मन्त्र सिद्धि के बाद १०८ मन्त्र के उच्चारण से सर्प का स्तम्भन हो जाता है। सर्प की ऊपर नीचे की दन्त पंक्तियाँ मिल जाती हैं, ठोड़ी के ऊपर नीचे के भाग सिल से जाते हैं, जीभ से जीभ मिलकर ऊपर का मुख भाग नीचे के भाग से मिल जाता है। यदि सर्प एक से अधिक हों तो उनके फन एक साथ बँध जाते हैं। मन्त्र निम्न हैं :--

मा नो देवा अहिर्वधीत् सतोकान्त्सहपूरुषान्।
संयतं न वि ष्परद् व्यात्तं न सं यमन्नमो देवजनेभ्यः ॥१
नमोऽस्त्वसिताय नमस्तिरश्चिराजये।
स्वजाय बभ्रवे नमो नमो देवजनेभ्यः ॥२
सं ते हन्मि दता दतः समु ते हन्वा हनू।
सं ते जिह्वया जिह्वां सम्वास्नाह आस्यम् ॥३

(अ० ६। ५६)

## घावों की पूर्ति के लिये

घावों व व्रणों के कष्ट को दूर करने व भरने से लिए लाख को निम्न मन्त्रों से अभिमन्त्रित करके प्रयुक्त करें तो लाभ होगा:--

रात्री माता नभः पितार्यमा ते पितामहः।
सिलाचो नाम वा असि सा देवानामसि स्वसा ॥१
यस्त्वा पिबति जीवति त्रायसे पुरुष त्वम्।
भर्त्री हि शश्वतामसि जनानां च न्यञ्चनी ॥२
वृक्षंवृक्षमा रोहसि वृषण्यन्तीव कन्यला।
जयन्ती प्रत्यातिष्ठन्ती स्परणी नाम वा असि ॥३
यद् दण्डेन यदिष्वा यद् वारुर्हरसा कृतम्।
तस्य त्वमसि निष्कृतिः सेमं निष्कृधि पूरुषम् ॥४
भद्रात् प्लक्षान्निस्तिष्ठस्यश्वत्थात् खदिराद् धवात्।

भद्रान्न्यग्रोधात् पर्णात् सा न एह्यरुन्धति ॥५
हिरण्यवर्णे सुभगे सूर्यवर्णे वपुष्टमे ।
रुतं गच्छासि निष्कृते निष्कृतिर्नाम वा असि ॥६
हिरण्यवर्णे सुभगे शुष्मे लोमशवक्षणे ।
अपामसि स्वसा लाक्षे वातो हात्मा बभूव ते ॥७
सिलाची नाम कानीनोऽजबभ्रु पिता तव ।
अश्वो यमस्य यः श्यावस्तस्य हास्नास्युक्षिता ॥८
अश्वस्यास्नः सम्पतिता सा वृक्षाँ अभि सिष्यदे ।
सरा पतत्रिणी भूत्वा सा न एह्यरुन्धति ॥९

( अ० ५ । ५ )

## केश वृद्धि के लिये

काचमाची नामक औषधि को अभिमन्त्रित करके जल में मिला कर सिर धोएँ तो केश दृढ़ होते हैं, जहाँ उत्पन्न न हुए हों, वहाँ उत्पन्न होने लगते हैं, लम्बे होते हैं और केश रोग दूर होते हैं। मन्त्र इस प्रकार हैं :—

देवी देव्यामधि जाता पृथिव्यामस्योषधे ।
तां त्वा नितत्नि केशेभ्यो दृंहणाय खनामसि ॥१
दृंह प्रत्नाञ्जनयाजाताञ्जातानु वर्षीयसस्कृधि ॥२
यस्ते केशोऽवपद्यते समूलो यश्च वृश्चते ।
इदं तं विश्वभेषज्याभि षिञ्चामि वीरुधा ॥३

( अ० ६ । १३६ )

यां जमदग्निरखनद् दुहित्रे केशवर्धनीम् ।
तां वीतहव्य आभरदसितस्य गृहेभ्यः ॥१
अभीशुना मेया आसन् व्यामेनानुमेयाः ।
केशा नडाइव वर्धन्तां शीर्ष्णस्ते असितः परि ॥२
दृंह मूलमाग्र यच्छ वि मध्यं यामयौषधे ।
केशा नडाइव वर्धन्तां शीर्ष्णस्ते असिताः परि ॥३

केशा नडाइव वर्धन्तां शीर्ष्णस्ते असिताः परि ।।३

( अ० ६।१३७ )

## टूटे अंगों को जोड़ने के लिए

जब किसी व्यक्ति को शस्त्रादि से घायल किया गया हो और उसका सारा शरीर वेदना से चूर-चूर हो रहा हो, प्रहार के कारण मज्जा अलग हो गई हो अथवा हड्डी टूट गई हो, मांस कट गया हो, कोई अङ्ग पृथक हो गया हो तो लाल रङ्ग वाली लाख को निम्न मन्त्रों से अभिमन्त्रित करके उस स्थान पर लगा दें तो यह अथर्व मन्त्र मज्जा को मज्जा से, चर्म को चर्म से मिला देते हैं। हड्डियों पर रक्त प्रवाहित होने लगता है और शरीर के टूटे अङ्ग मिल कर ठीक हो जाते हैं :—

रोहण्यसि रोहण्यस्घ्नश्छिन्नस्य रोहणी ।
रोहयेदमरुन्धति ।।१
यत् ते रिष्ट यत् ते द्युत्तमस्ति पेष्ट्र त आत्मनि ।
धाता तद् भद्रया पुनः सं दर्धत् पुरुषा परुः ।।२
सां ते मज्जा मज्जा भवतु समु ते परुषा परुः ।
सं ते मांसस्य विस्रस्तां समस्थ्यपि रोहतु ।।३
मज्जा मज्जा सं धीयतां चर्मणा चर्म रोहतु ।
असृक् ते अस्थि रोहतु मांसं मांसेन रोहतु ।।४
लोम लोम्ना स कल्पया त्वचा स कल्पया त्वचम् ।
असृक् ते अस्थि रोहतु च्छिन्नं सं धेह्योषधे ।।५
स उत् तिष्ठ प्रेहि प्र द्रव रथः सुचक्रः सुपविः सुनाभिः ।
प्रति तिष्ठोर्ध्वः ।।६
यदि कर्तं पतित्वा संशश्रु यदि वाश्मा प्रहतो जघान ।
ऋभू रथस्येवाङ्गानि स दधत् परुषा परुः ।।७

( अ० ४।१२ )

## वीर्य वृद्धि व पुष्टि के लिए

कैथ की जड़ को निम्न मन्त्रों से अभिमन्त्रित करके सेवन किया जाये तो रोगी के वीर्य सम्बन्धी रोग दूर होते हैं, कमजोरी और नपुंसकता का नाश होता है व वीर्य पुष्ट होता है:—

यां त्वा गन्धर्वो अखनद् वरुणाय मृतभ्रजे ।
यां त्वा वयं खनामस्योषधिं शेपहर्षणीम् ।।१
उदुषा उदु सूर्य उदिदं मामकं वचः ।
उदेजतु प्रजापतिर्वृषा शुष्मेण वाजिना ।
यथा स्म ते विरोहतोऽभितप्तमिवानति ।
ततस्ते शुष्मवत्तरमियं कृणोत्वोषधिः ।।३
उच्छुष्मौषधीनां सार ऋषभाणाम् ।
सं पुंसामिन्द्र वृष्ण्यमस्मिन् धेहि तनूवशिन् ।।४
अपां रसः प्रथमजोऽथो वनस्पतीनाम् ।
उत सोमस्य भ्रातास्युतार्शमसि वृष्ण्यम् ।।५
अद्याग्ने अद्य सवितरद्य देवि सरस्वति ।
अद्यास्य ब्रह्मणस्पते धनुरिवा तानया पसः ।।६
आहं तनोमि ते पसो अधि ज्यामिव धन्वनि ।
क्रमस्वर्शइव रोहितमनवग्लायता सदा ।।७
अश्वस्याश्वतरस्याजस्य पेत्वस्य च ।
अथ ऋषभस्य ये वाजास्तानस्मिन् धेहि तनूवशिन् ।।८
( अ० ४ । ३० )

आ वृषायस्व श्वसिहि वर्धस्व प्रथयस्व च ।
यथाङ्गं वर्धतां शेपस्तेन योषितमिज्जहि ।।१
येन कृशं वाजयन्ति येन हिन्वन्त्यातुरम् ।
तेनास्य ब्रह्मणस्पते धनुरिवा तानया पसः ।।२
आहं तनोमि ते पसो अधि ज्यामिव धन्वनि ।

क्रमस्वर्शइव रोहितमनवग्लायता सदा ।।३

( अ० ६ । १०१ )

## पुत्र प्राप्ति के लिए

निम्न मन्त्रों से अभिमन्त्रित जल नित्य बन्ध्या को पिलावें तो गर्भ दोषों की निवृत्ति होती है और स्त्री गर्भ धारण करने की क्षमता प्राप्त करती है :—

येन वेहद् वभूविथ नाशयामसि तत् त्वत् ।
इदं तदन्यत्र त्वदह दूरे नि दध्मसि ।।१
आ ते योनिं गर्भ एतु पुमान् बाणइवेषुधिम् ।
आ वीरोऽत्र जायतां पुत्रस्ते दशमास्यः ।।२
पुमांसं पुत्रं जनय तं पुमाननु जायताम् ।
भवासि पुत्राणां माता जातानां जनयाश्च यान् ।।३
यानि भद्राणि वीजान्यृषभा जनयन्ति च ।
तैस्त्वं पुत्रं विन्दस्व सा प्रसूर्धेनुका भव ।।४
कृणोमि ते प्राजापत्यमा योनिं गर्भ एतु ते ।
विंदस्व त्वं पुत्रं नारि यस्तुभ्यं शमसच्छमु तस्मै त्वं भव।।५
यासां द्यौष्पिता पृथिवी माता समुद्रो मूलं वीरधां वभूव।
तास्त्वा पुत्राविद्याय दैवीः प्रावन्त्वोषधयः ।। ६

( अ० ३ । २३ )

यद्येकवृषोऽसि सृजारसोऽसि ।।१
यदि द्विवृषोऽसि सृजारसोऽसि ।।२
यदि त्रिवृषोऽसि सृजारसोऽमि ।।३
यदि चतुर्वृषोऽसि सृजारसोऽसि ।।४
यदि पञ्चवृषोऽसि सृजारसोऽसि ।।५
यदि षड्वृषोऽसि सृजारसोऽसि ।।६
यदि सप्तवृषोऽसि सृजारसोऽसि ।।७

यद्यष्टवृषोऽसि सृजारसोऽसि ॥ ८
यदि नव वृषोऽसि सृजारसोऽसि ॥६
यदि दशवृषोऽसि सृजारसोऽसि ॥१०
यद्येकादशोऽसि सोऽपोदकोऽसि ॥११
( अ० ५ । ५ )

शमीमश्वत्था आरूढ़स्तत्र पुंसुवनं कृतम् ।
तद् वै पुत्रस्य वेदनं तत् स्त्रीष्वा भरामसि ॥१
पुंसि वै रेतो भवति तत् स्त्रियामनु षिच्यते ।
तद् वै पुत्रस्य वेदनं तत् प्रजापतिरब्रवीत् ॥२
प्रजापतिरनुमतिः सिनीवाल्य चीक्लृपत् ।
स्त्रैषूयमन्यत्र दधत् पुमांसमु दधदिह ॥३
( अ० ६ । ११ )

यन्तासि यच्छसे हस्तावप रक्षांसि सेधसि ।
प्रजां धनं च गृह्णानः परिहस्तो अभूदयम् ॥१
परिहस्त वि धारय योनिं गर्भाय धातवे ।
मर्यादे पुत्रमा धेहि तं त्वमा गमयागमे ॥२
यं परिहस्तमविभरदितिः पुत्रकाम्या ।
त्वष्टा तमस्या आ बध्नाद् यथा पुत्रं जनादिति ॥३
( अ० ६ । ८१ )

## गर्भ पुष्टि के लिये

गर्भवती स्त्री स्वयं निम्न मन्त्रों का पाठ कर सके तो उत्तम है। यदि वह न कर सके तो २१ बार के अभिमन्त्रित जल का नित्य पान करें। इससे गर्भ पुष्ट होता है, बालक स्वस्थ सुन्दर चरित्रवान व बुद्धिमान होता है।

पर्वताद् दिवो योनेरङ्गादङ्गात् समाभृतम् ।
शेपो गर्भस्य रेतोधाः सरौ पर्णमिवा दधात् ॥१

यथेयं पृथिवी मही भूतानां गर्भमादधे ।
एवा दधामि ते गर्भं तस्मै त्वामवसे हुवे ॥२
गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति ।
गर्भं ते अश्विनोभा धत्तां पुष्करस्रजा ॥३
गर्भं ते मित्रावरुणौ गर्भं देवो बृहस्पतिः ।
गर्भं ते इन्द्रश्चाग्निश्च गर्भं धाता दधातु ते ॥४
विष्णुर्योनि कल्पयतु त्वष्टा रूपाणि पिंशतु ।
आ सिञ्चतु प्रजापति र्धाता गर्भं दधातु ते ॥५
यद् वेद राजा वरुणो यद् वा देवी सरस्वती ।
यदिन्द्रो वृत्रहा वेद तद् गर्भकरणं पिब ॥६
गर्भो अस्योषधीनां गर्भो वनस्पतीनाम् ।
गर्भो विश्वस्य भूतस्य सो अग्ने गर्भमेह धाः ॥७
अधि स्कन्द वीरयस्व गर्भमा धेहि योन्याम् ।
वृषासि वृष्ण्यावन् प्रजायै त्वा नयामसि ॥८
वि जिहीष्व वार्हत्सामे गर्भस्ते योनिमा शयाम् ।
अदुष्ट देवाः पुत्र सोमपा उभयाविनम् ॥९
वातः श्रेष्ठेन रूपेणास्या नार्या गवीन्योः ।
पुमांस पुत्रमा धेहि दशमे मासि सूतवे ॥१०
त्वष्टः श्रेष्ठेन रूपेणास्या नार्या गवीन्योः ।
पुमांसं पुत्रमा धेहि दशमे मासि सूतवे ॥११
सवितः श्रेष्ठेन रूपेणास्या नार्या गवीन्योः ।
पुमांसं पुत्रमा धेहि दशमे मासि सूतवे ॥१२
प्रजापते श्रेष्ठेन रूपेणास्या नार्या गवीन्योः ।
पुमांसं पुत्रमा धेहि दशमे मासि सूतवे ॥१३

(अ० ५ । २५)

## सुखी प्रसव के लिये

निम्न मंत्रों से पवित्र जल को ८ बार अभिमन्त्रित करके प्रसूता को पिलावें तो प्रसव सुविधा से हो जाता है।

यथेयं पृथिवी मही भूतानां गर्भमादधे।
एवा ते ध्रियतां गर्भो अनु सूतुं सवितवे ॥१
यथेयं पृथिवी मही दाधारेमान् वनस्पतीन्।
एवा ते ध्रियतां गर्भो अनु सूतुं सवितवे ॥२
यथेयं पृथिवी मही दाधार पर्वतान् गिरीन्।
एवा ते ध्रियतां गर्भो अनु सूतुं सवितवे ॥३
यथेयं पृथिवी मही दाधार विष्ठितं जगत्।
एवा ते ध्रियतां गर्भो अनु सूतुं सवितवे ॥४

( अ० ६ । १७ )

## सब प्रकार के मंगल के लिए

किसी भी प्रकार के अमंगल को मङ्गल में और प्रतिकूलता को अनुकूलता में परिवर्तित करने के लिए निम्न मन्त्रों का नित्य पाठ व हवन करें :—

शं न इन्द्राग्नी भवतामवोभिः शं न इन्द्रावरुणा रातहव्या।
शमि द्रा सोमा सुविताय शयो शं न इन्द्रापूषणा वाजसातौ ॥१
शं नो भग शमु न. शं सो अस्तु शं नः पुरधिः शमु सन्तु रायः।
शं नः सत्यस्य सुयमस्य शंसः श नो अर्यमा पुरुजातो अस्तु ॥२
शं नो धाता शमु धर्ता नो अस्तु शं न उरूची भवतु स्वधाभिः।
शं रोदसी वृहती शं नो अ द्रः शं नो देवान सुहवानि सन्तु ॥३
शं नो अग्निर्ज्योतिरनीको अस्तु शं नो मित्रावरुणावश्विना शम।
शं नः सुकृतां सुकृतानि सन्तु शं न इषिरो अभि पांतु वातः ॥४
शं नो द्यावापृथिवी पूर्वपूतौ शमन्तरिक्षं दृशये नो अस्तु।

शं न औषधीर्वनिनो भवन्तु शं नो रजसस्पतिरस्तु जिष्णुः ॥५
शं न इन्द्रो वसुभिर्देवो अस्तु शमादित्येभि र्वरुणः सुशंसः ।
शं नो रुद्रो रुद्रंभिर्जलाषः शं नस्त्वष्टा ग्नाभिरिह श्रृणोतु ॥६
शं नः सोमो भवतु ब्रह्म शं नः शं नो ग्रावाण शमु सन्तु यज्ञाः ।
शं नः स्त्ररूणां मितयो भवन्तु शं नः प्रस्वः शम्वस्तु वेदि॥७
शं नः सूर्य उरूचक्षा उदेतु शं नो भवन्तु प्रदिशश्चतस्त्रः ।
शं नः पवता ध्रुवयोशभवन्तुं नः सिन्धवः शमु सन्त्वापः ॥८
शं नो अदितिर्भवतु व्रतेभिः शं नो भवन्तु मरुतः स्वर्गाः ।
शं नो विष्णु शमु पूषा नो अस्तू शं नो भवित्र शम्वस्तु वायु ॥९
शं नो देवः सविता त्रायमाण शं नो भवन्तुषसो विभातीः ।
शं नः पर्जन्यो भवतु प्रजाभ्यः शं नः क्षेत्रस्य पतिरस्तु शम्भु॥१०

( अ० १९ । १० )

[ २ ]

शं नः सत्यस्य पतयो भवन्तु शं नो अर्वन्तः शमु सन्तु गावः ।
शं न ऋभव सुकृतः सुहस्ताः शं नो भवन्तु पितरो हवेषु ॥१
शं नो देवा विश्वदेवा भवन्तु शं सरस्वती सह धीमिरस्तु ।
शमभिषाचः शमु रातिषाचः शं नो दिव्याः पार्थिवा शं नो अप्याः ॥२
शं नो अज एकपाद देवो अस्तु शमहिर्वघ्न्पः शं समुद्रः ।
शं नो अपां नपात् पेरुरस्तु शं नः पृश्निर्भवतु देवगोपा ॥३
आदित्या रुद्रो वसवो जुषन्तामिदं ब्रह्म क्रियमाण नवीयः ।
श्रृण्वन्तु नो दिव्या पार्थिवासो गोजाता उत ये यज्ञियासः ॥४
ये देवनामृत्विजो यज्ञियासो मनोर्यजत्रा अमृता ऋतज्ञाः ।
ये नो रासन्तामुरुगायमद्य यूय पात स्वस्तिभिः सदा नः ॥५
तदस्तु मित्रावरुण तदग्ने शं योरस्मभ्यमिदमस्तु शस्तम् ।
अशोमहि गाधमुत प्रतिष्ठां नमो दिवे वृहते सादनाय ॥६

( अ० १९ । ११ )

## ब्रह्मलोक की प्राप्ति के लिये

तप और कर्म से ब्रह्मज्ञानी पुरुष जहाँ जाते हैं, वहाँ पहुँचने के लिए निम्न मन्त्रों का नित्य पाठ व हवन करना चाहिए :—

यत्र ब्रह्मविदो यान्तिदीक्षया तपसा सह ।
अग्निर्मा तत्र नयत्वग्निर्मेधा दधातु मे । अग्नये स्वाहा ॥१
यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह ।
वायुर्मा तत्र नयतु वायु प्राणान् दधातु मे । वायवे स्वाहा ॥२
यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह ।
सूर्यो मा तत्र नयत चक्षुः सूर्यो दधातु मे । सूर्याय स्वाहा ॥३
यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह ।
चन्द्रो मा तत्र नयतु मनश्चन्द्रो दधातु मे । चन्द्राय स्वाहा ॥४
यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह ।
सोमो मा तत्र नयतु पयः सोमो दधातु मे । सोमोय स्वाहा ॥५
यत्र ब्रह्मविदो यान्ति दीक्षया तपसा सह ।
इन्द्रो मा तत्र नयतु वलमिन्द्रो दधातु मे । इन्द्राय स्वाहा ॥६
यत्र ब्रह्मविदो यान्ति दीक्षाया तपसा सह ।
आपो मा तत्र वयम्त्वमृत मोप तिष्ठनु अद्भय स्वाहा ॥७
यत्र ब्रह्मविदो यान्ति दीक्षाया तपसा सह ।
ब्रह्मा मा तत्र मयतुब्रह्मा ब्रह्म दधातु मे । ब्रह्मणे स्वाहा ॥८
( अ० १६ । ४३ )

## आत्म गौरव की साधना

हीन भावनाओं के शमन और आत्मज्ञान की प्राप्ति के लिए निम्न मन्त्रों का नित्य पाठ व हवन करना चाहिए। इनके अर्थों का चिन्तन भी आवश्यक है। अतः अर्थ भी साथ दे रहे हैं:—

अहं रुद्रेभिर्व भिश्चराम्यहमादित्यैरुत विश्वेदेवैः ।
अहं मित्रावरुण भा विभर्म्यहमिन्द्राग्नी अहमश्विनोभा ॥१

अहं राष्ट्री सङ्गमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् ।
ता मा देवा व्यदधुः पुरुत्रा भरिस्थात्रां भर्यावेशयन्तः ।।२
अहमेव स्वयमिदं वदामि जुष्टं देवानामुत मानुषाणाम् ।
यं कामये ततमुग्रं कृणोमि तं ब्रह्माण तमृषि तं सुमेधाम् ।।३
मया सोऽन्नमत्ति यो विपश्यति यः प्राणति य ईं शृणोत्युक्तम् ।
अमन्तवो मां त उप क्षियन्ति श्रुधि श्रुत श्रद्धयं ते वदामि ।।४
अहं रुद्राय धनुरा तनोमि ब्रह्मद्विषे शरवे हन्तवा उ ।
अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आ विवेश ।।५
अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम् ।
अहं दधामि द्रविणा हविष्मते सुप्रव्या यजमानाय सुन्वते ।।६
अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्वन्तः समुद्रे ।
ततो वि तिष्ठे भुवनानि विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि ।।७
अहमेव वातइव प्र वाम्यारभमाणा भुवनानि विश्वा ।
परो दिवो पर एता पृथिव्यैतावती महिम्ना सं बभूव ।।८

( अ० ४ । ३० )

"मैं ग्यारह रुद्र और आठ वसुओं के रूप से विचरती हूँ, धाता आदि द्वादश आदित्य और विश्वेदेवा रूप से भी विचरती हूँ । मैं ब्रह्म-वादिनी परब्रह्मात्मिका हूँ । मैं मित्रावरुण का भरण करती, इन्द्राग्नि और अश्विद्वय को धारण करती हूँ ।।१।। मैं ब्रह्मान्तिका दिखाई पड़ने वाले सम्पूर्ण विश्व की अधीश्वरी हूँ, इसलिए आराधकों को ऐश्वर्य प्राप्त कराती हूँ । मैंने परब्रह्म से साक्षात् किया है, इसलिये यज्ञयोग्य देवताओं में प्रमुख हूँ । ऐसी मुझे, फलदाता देवता अनेक स्थानों में प्रतिष्ठित करते हैं । इस प्रकार देवगण जो कुछ करते हैं, वह सब मेरे निमित्त ही होता है ।।२।। मैं स्वयं आत्मरूपा हूँ । मैं इन्द्रादि देव और मनुष्यों को भी प्रिय ब्रह्मात्मक वस्तु का उपदेश करती हूँ । मैं जिसकी रक्षा करना चाहती हूँ उसे प्रबल बनाती हूँ । मैं उसे ईश्वर, स्रष्टा

और ऋषि बना कर सुन्दर बुद्धि से सम्पन्न करती हूँ ।।३।। अन्न भक्षण करने वाला भोक्ता मेरे द्वारा ही खाता है, देखना, सुनना, श्वास लेना आदि सभी कार्य मेरे द्वारा ही किये जाते हैं, मैं इस प्रकार अन्तर्यामी रूप से व्याप्त हूँ । जो मुझे नहीं जानते, वह उपक्षीण हो जाते हैं । हे मित्र ! यह भक्ति करने के योग्य जो कुछ मैंने कहा है, उसे ध्यान से सुन ।।४।। त्रिपुरासुर को जीतने के लिए मैं ही धनुष उठाती और स्तुति करने वालों के लिए युद्ध करती हूँ । मैं स्वर्ग और आकाश मे अदृश्य रूप से व्याप्त रहती हूँ ।।५।। शत्रुओं का जहाँ नाश हो जाता है, ऐसे स्वर्ग में निवास करने वाले देवताओं से सम्बन्धित सोम का मैं पोषण करती, त्वष्टा, पूषा और भग देवता का भी मैं ही पोषण करती हूँ और मैं ही हविदाता यजमान को भी यज्ञ का फल रूप ऐश्वर्य प्रदान करती हूँ । ।।६।। इस दीखते हुए लोक के शिर रूप सत्यलोक में निवास करने वाले विधाता को मैं ही उत्पन्न करती हूँ । इस संसार की मैं ही कारण रूप हूँ, ब्रह्म चैतन्य की निमित्त भी मैं हूँ । समुद्र में वडवानल और विद्युत रूप तेज भी मेरा है । मैं सब प्राणियों को प्रकट करती, स्वर्ग और ब्रह्म में अध्यस्त विकारों को मायात्मक देह से स्पर्श करती, पृथिवी के ऊपर पिता रूप द्युलोक को प्रेरित करती और अन्तरिक्ष में जल के विकार रूप देवताओं में जो ब्रह्म व्याप्त है, उसके द्वारा मैं सबको छूती हूँ ।।७।। मैं किसी अन्य की सहायता लिये बिना सब प्राणियों को उत्पन्न करती हुई वायु के समान प्रवृत्त होती हूँ । द्युलोक, पृथिवी और सम्पूर्ण विकारों से रहित ब्रह्मचैतन्य रूप वाली मैं अपनी ही महिमा से ऐसी शक्तिशालिनी हो गई हूँ ।।८।।

## शान्ति प्राप्ति के लिये

किसी प्रकार की भी अशान्ति के लिये निम्न मन्त्रों का सफल प्रयोग किया जा सकता है । अशान्ति—आर्थिक, पारिवारिक अथवा

सामाजिक हो। उसको शान्ति हो जाती है। विपरीत ग्रहों की भी इससे शान्ति होती है। चन्द्र मण्डल के ग्रह, राहु से ग्रस्त सूर्य, धूमकेतु का अनिष्ट और रुद्र के तीक्षण सन्ताप देने वाले उपद्रव सभी शान्त होते हैं। राष्ट्र में होने वाले विघ्न भी शांत होते है।

शान्ता द्यौः पृथिवी शान्तमिदमुर्वन्तरिक्षम्।
शान्ता उदन्वताराप: शान्ता नः सन्त्वोषधीः ।।१
शान्ता नि पूर्वरूपाणि शान्तं नो अस्तु कृताकृतम्।
शान्तं भूत च भव्यं च सर्वमेव शमस्तु नः ।।२
इ यं या परमेष्ठिनी वाग् देवी ब्रह्मसंशिता।
यथैव संसृजे घोरं तथैव शान्तिरस्तु नः ।।३
इदं यत् परमेष्टिनं मनो वां ब्रह्मसंशितम्।
येनैव ससृजे घोर तेनैव शान्तिरस्तु नः ।।४

इमानि यानि पंचेन्द्रियाणि मनः षष्ठानि मे हृदि ब्रह्मणा सशितानि यै रेव ससृजे घोर तैरेव शान्तिरस्तु नः ।।५

शं नो मित्रः श वरुण बिष्णुः शं प्रजापतिः।
शं न इन्द्रो वृहस्पतिः शं नो भवत्वयमा ।।६
शं नो मित्रः शं वरुणः शं विवस्वांचमन्तकः।
उत्पाताः पार्थिवान्तरिक्षाः शं नो दिविचरा ग्रहाः ।।७
शं नो भूमिर्वेप्यमाना शमुल्का निर्हंत च यत्।
शं गावा लोहितक्षीराः शं भूमिरव तीर्यतीः ।।८

नक्षत्रमुल्कामिहय शमस्तु नः शं नोऽभिचाराः शमु शमु सन्तु कृत्या शं ना निखाता वल्गाः शमुल्का देशोहसर्गाः शमु नो भवन्तु ।।६

शं नो ग्रहाश्चान्द्रमसाः शमादित्यश्च राहुणा।
शं नो मृत्युर्धूमकेतुः शं रुद्रास्तिग्यतेजसः ।।१०
शं रुद्राः शं वसवः शमादित्या शमग्नयः।
शं नो महर्षयो देवाः शं देवा शं वृहस्पतिः ।।११

ब्रह्म प्रजापतिर्धाता लोका वेदा सप्तऋषयऽनयो: ।
तैर्मे कृतं स्वस्त्ययनमिन्द्रो मे शर्म यच्छन्तु ब्रह्मा मे शर्म यच्छतु ।
विश्वे मे देवा: शर्म यच्छन्तु सर्वे मे देवा: शर्म यच्छतु ।।१२
यानि कानि चिच्छान्तानि लोके सप्त ऋषयो विदु: ।
सर्वाणि शं भवन्त मे शं अस्त्वभय मे अस्तु ।।१३
पृथिवी शान्तिरन्तरिक्ष शांतिद्यौ: शान्तिपाप: शान्यिरोषधय शांति वनस्पतय: शांतिविश्वे भ देवा: शांति: सर्वे मे देवान्लि शांति: शान्ति: शांतिभि । ताभि: शान्तिभि: सर्व शान्तिभि: षमयामोऽहं यदिह घोर यदिह क्रूर यदिह पापतच्छान्तं तच्छिव सर्वमेव-शमस्तु न: ।। १४ ( अ० १६ । ६ )

## मधुरता प्राप्ति के लिए

मधुर भाषण व व्यवहार एक ऐसा अस्त्र है जो शत्रुओं को भी मित्र बना देता है और कटु भाषण से मित्र भी निश्चय रूप से शत्रु बन जाते हैं। अत: हर क्षेत्र में सफलता के लिए मधुर व्यवहार के गुण का होना आवश्यक है। निम्न मन्त्रों की साधना साधक के व्यवहार में मधुरता ओत-प्रोत करने में सहायक होती है:—

एका च मे दश च मेऽपवक्तार ओषधे ।
ऋतजात ऋतावरि मधु मे मधुला कर: ।।१
द्वे च मे विंशतिश्च मेऽपवक्तार ओषधे ।
ऋतजात ऋत:वरि मधु मे मधुला कर: ।।२
तिस्रश्च मे त्रिंशच्च मेऽपवक्तार ओषधे ।
ऋतजात ऋतावरि मधु मे मधुला कर: ।।३
चतस्रश्च मे चत्वारिंशच्च मेऽपवक्तार ओषधे ।
ऋतजात ऋतावरि मधु मे मधुला कर: ।।४
पञ्च च मे पञ्चाशच्च मेऽपवक्तार ओषधे ।
ऋतजात ऋतावरि मधु मे मधुला कर: ।।५

षट् च मे षष्टिश्च मेऽपवक्तार ओषधे ।
ऋतजात ऋतावरि मधु मे मधुला करः ॥६
सप्त च मे सप्ततिश्च मेऽपवक्तार ओषधे ।
ऋतजात ऋतावरि मधु मे मधुला करः ॥७
अष्ट च मेऽशीतिश्च मेऽपवक्तार ओषधे ।
ऋतजात ऋतावरि मधु मे मधुला करः ॥८
नव च मे नवतिश्च मेऽपवक्तार ओषधे ।
ऋतजात ऋतावरि मधु मे मधुला करः ॥९
दश च मे शतं च मेऽपवक्तार ओषधे ।
ऋतजात ऋतावरि मधु मे मधुला करः ॥१०
शतं च मे सहस्रं चापवक्तार ओषधे ।
ऋतजात ऋतावरि मधु मे मधुला करः ॥११॥

( अ० ५ । १५ )

## पाप निवृत्ति के लिए

पुराने अथवा वर्तमान के पापजनित संस्कारों को नष्ट कर पवित्र जीवन व्यतीत करने और आत्म ज्ञान के मार्ग को प्रशस्त करने के लिए निम्न मन्त्रों का दैनिक पाठ व हवन करना चाहिए:—

[ १ ]

मरुतां मन्वे अधि मे ब्रवन्तु प्रेमं वाजं वाजसाते अवन्तु ।
आशूनिव सुयमानह्व ऊतये ते नो मुञ्चन्त्वंहसः ॥१
उत्समक्षितं व्यचन्ति ये सदा य आसिञ्चन्ति रसमोषधीषु ।
पुरो दधे मरुतः पृश्निमातृंस्ते नो मुञ्चन्त्वंहसः ॥२
पयो धेनूनां रसमोषधीनां जवमर्वतां कवयो य इन्वथ ।
शग्मा भवन्तु मरुतो नः स्योनास्ते नो मुञ्चन्त्वंहसः ॥३
अपः समुद्राद् दिवमुद् वहन्ति दिवस्पृथिवीमभि ये सृजन्ति ।

ये अद्भिरीशाना मरुतश्चरन्ति ते नो मुञ्चन्त्वंहसः ॥४
ये कीलालेन तर्पयन्ति ये घृतेन ये वा वयो मेदसा संसृजन्ति ।
ये अद्भिरीशाना मरुतो वर्षयन्ति ते नो मुञ्चन्त्वंहसः ॥५
यदीदिदं मरुतो मारुतेन यदि देवा दैव्येनेदृगार ।
यूयमीशिध्वे वसव स्तस्य निष्कृतेरते नो मुञ्चन्त्वंहसः ॥६
तिग्ममनीकं विदितं सहस्वन् मारुत शर्धः पृतनासूग्रम् ।
स्तौमि मरुतो नाथितो जोहवीमि ते नो मुञ्चन्त्वंहसः ॥७

( अ० ४ । २७ )

[ २ ]

मन्वे वां मित्रावरुणावृतावृधौ सचेतसौ द्रुह्वणो यौ नुदेथे ।
प्र सत्यावानमवथो भरेषुतो नो मुञ्चतमंहसः ॥१
सचेतसौ द्रुह्वणो यौ नुदेथे प्र सत्यावानमवथो भरेषु ।
यौ गच्छथो नृचक्षसौ बभ्रुणा सुतं तौ नो मुञ्चतमंहसः ॥२
यावङ्गिरसमवथो यावगस्ति मित्रावरुणा: जमदग्निमत्रिम् ।
यौ कश्यपमवथो यौ वसिष्ठं तौ नो मुञ्चतमंहसः ॥३
यौ श्यावाश्वमवथो वध्र्यूश्वं मित्रावरुण पुरुमीढमत्रिम् ।
यौ विमदमवथः सप्तवध्रिं तौ नो मुञ्चतमहसः ॥४
यौ भरद्वाजमवथो यौ गविष्ठिरं विश्वामित्रं वरुण मित्र कुत्सम् ।
यौ कक्षीवन्तमवथः प्रोत कण्वं तौ नो मुञ्चतमहसः ॥५
यौ मेधातिथिमवथो यौ त्रिशोकं मित्रावरुणावुशनां काव्यं यौ ।
यौ गौतममवथः प्रोत मुद्गलं तौ नो मुञ्चतमंहसः ॥६
ययो रथःसत्यवर्त्मर्जु रश्मिर्मिथुया चरन्तमभियाति दूषयन् ।
स्तौमि मित्रावरुणौ नाथितो जोहवीमि तौ नो मुञ्चतमंहसः ॥७

( अ० ४ । २९ )

[ ३ ]

अप नः शोशुचदघमग्ने शुशुग्ध्या रयिम् । अप नः शोशुचदघम् ॥१
सुक्षत्रिया सुगातुया वसूया च यजामहे । अप नः शोशुचदघम् ॥२

प्र यद् भन्दिष्ठ एषां प्रास्माकासश्च सूरयः।अप नः शोशुचदघम् ।।३
प्र यत् ते अग्ने सूरयो जायेमहि प्र ते वयम्। अप नः शोशुचदघम् ।४
प्र यदग्नेः सहस्वतो विश्वता यन्ति मानवः। अप नः शोशुचदघम् ।।५
त्वं हि विश्वतोमुख विश्वतः परिभूरसि। अप नः शोशुचदघम् ।।६
द्विषो नो विश्वतोमुखाति नावेव पारय। अप नः शोशुचदघम् ।।७
स नः सिन्धुमिव नावाति पर्षा स्वस्तये। अप नः शोशुचदघम् ।।८

( अ० ४। ३३ )

[ ४ ]

त्रिते देवा अमृजतैतदेनस्त्रित एनन्मनुष्येषु ममृजे।
ततो यदि त्वा ग्राहिराशे तां ते देवा ब्रह्मणा नाशयन्तु ।।१
मरीचीर्धूमान् प्र विशानु पाप्मन्नुदारान् गच्छोत वा नीहारान्।
नदीनां फेनाँ अनु तान् वि नश्य भ्रूणघ्नि पूषन् दुरितानि मृक्ष्व ।।२
द्वादशधा निहितं त्रितस्यापमृष्टं मनुष्यैनसानि।
ततो यदि त्वा ग्राहिरानशे तां ते देवा ब्रह्मणा नाशयन्तु ।।३

( अ० ६। ११३ )

[ ५ ]

यद् देवा देवहेडनं देवासश्चकृमा वयम्।
आदित्यास्तस्मान्नो यूयमृतस्यर्तेन मुञ्चत ।।१
ऋतस्यर्तेनादित्या वजत्रा मुञ्चतेह नः।
यज्ञं यद् यज्ञवाहसः शिक्षन्तो नोपशेकिम ।।२
मेदस्वता यजमानाः स्रू चाज्यानि जुह्वतः।
अकामा विश्वे वो देवाः शिक्षन्तो नोप शेकिम ।।३

( अ० ६। ११४ )

[ ६ ]

यद् विद्वांसो यद्विद्वांस एनांसि चकृमा वयम्।
यूयं नस्तस्मान्मुञ्च विश्वे देवाः सजोषसः ।।१

यदि जाग्रद् यदि स्वपन्नेन एनस्योऽकरम् ।
भूतं मा तस्माद् भव्यं च द्रुपदादिव मुञ्चताम् ॥२
द्रुपदादिव मुमुचानः स्विन्नः स्नात्वा मलादिव ।
पूतं पवित्रेणेवाज्यं विश्वे शुम्भन्तु मैनसः ॥३
( अ० ६ । ११५ )

[ ७ ]

याद् यामं चकृर्निखनन्तो अग्र कार्षीवणा अन्नविदो न विद्यया ।
वैवस्वते राजनि तज्जुहोम्यथ यज्ञियं मधुमदस्तु नोऽन्नम् ॥१
वैवस्वत कृणवद् भागधेयं मधभागो मधुना सं सृजाति ।
मातुर्यदेन इषित न आगन् यद् वा पितापराद्धो जिहीडे ॥२
यदीदं मातुर्यदि वा पितुर्नः परि भ्रातुः पुत्राच्चेतस एन आगन् ।
यवन्तो अस्मान् पितरः सचन्ते तेषां सर्वेषा शिवो अस्तु मन्युः ॥३
( अ० ६ । ११६ )

[ ८ ]

इदं तत् कृष्णः शकुनिरभिनिष्पतन्नपीपतत् ।
आपो मा तस्मात् सवस्माद् दुरितात् पान्त्वंहसः ॥१
इद यत् कृष्णः शकुनिरवामृक्षन्निर्ऋते ते मुखेन ।
अग्निर्मा तस्मादेनसो गार्हपत्यः प्र मुञ्चतु ॥२
( अ० ७ । ६४ )

[ ९ ]

प्रतीचीनफलो हि त्वमपामार्ग रुरोहिथ ।
सर्वान् मच्छपथाँ अधि वरीयो यावया इतः ॥१
यद् दुष्कृत यच्छमलं यद् वा चेरिम पापया ।
त्वया तद् विश्वतोमुखापामागपि मृज्महे ॥२
श्यावदता कुनखिना वण्डेम यत्सहासिम ।
अपामार्ग त्वया वयं सर्वं तदप मृज्मये ॥३
( अ० ७ । ६५ )

[ १० ]

अप्सु ते राजन् वरुण गृहो हिरण्ययो मिथः ।
ततो घृतव्रतो राज सर्वा धामानि मुञ्चतु ॥१
धाम्नोधाम्ना राजन्नितो वरुण मुञ्च नः ।
यदापो अघ्न्या इति वरुणेति यदूचिम ततो वरुण मुञ्च नः ॥२
उदुत्तमं वरुण पाशमस्म दवाधमं वि मध्यम श्रथाय ।
अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥३
प्रास्मत् पाशान् वरुण मुंच सर्वान् य उत्तमा अधमा वारुणा ये ।
दुःष्वप्न्यं दुरितं निःष्वास्मदथ गच्छेम सुकृतस्य लोकम् ॥४

( अ० ७ । ८३ )

[ ११ ]

शुम्भनी द्यायापृथिवी अन्तिसुम्ने महिव्रते ।
आपः सप्त स्रुवर्देवीस्ता नो मुञ्चन्त्वंहसः ॥१
मुञ्चन्तु मा शपज्यादथो वरुण्या दुत ।
अथो यमस्य पड्वीशाद् विश्वास्माद् देवकिल्विषात् ॥२

( अ० ७ । ११२ )

[ १२ ]

अग्निं ब्रूमो वनस्पतीनोषधीरुत वीरुधः ।
इन्द्रं बृहस्पतिं सूर्यं ते नो मुञ्चन्त्वंहसः ॥१
ब्रूमो राजनं वरुणं मित्रं विष्णुमथो भगम् ।
अंशं विवस्वन्तं ब्रूमस्ते नो मुंचन्त्वहसः ॥२
ब्रूमो देवं सवितारं धातारमुत पूषणम् ।
त्वष्टारमग्रियं ब्रूमस्ते नो मुञ्चन्त्वंहसः ॥३
गन्धर्वाप्सरसो ब्रूमो अश्विना ब्रह्मणस्पतिम् ।
अर्यमा नाम यो देवस्ते नो मुञ्चन्त्वंहसः ॥४

अहोरात्रे इदं ब्रूपः सूर्याचन्द्रमसावुभा ।
विश्वानादित्यान् ब्रूमस्ते नो मुञ्चन्त्वंहसः ।।५
वातं ब्रूमः पर्जन्यमन्तरिक्षमथो दिशः ।
आशाश्च सर्वा ब्रूमस्ते नो मुंचन्त्वंहस ।।६
मुञ्चन्तु मा शपथ्या दहोरात्रे अथो उषाः ।
सोमो मा देवो मुंचन्तु यमाहुश्चन्द्रमा इति ।।७
पार्थिवा दिव्याः पशव आरण्या उत ये मृगाः ।
शकुन्तान् पक्षिण ब्रूमस्ते नो मुंचन्त्वंहसः ।।८
भवाशर्वाविदं ब्रूमो रुद्रं पशुपतिश्च यः ।
इषूर्या एषां संविद्म ता नः सन्तु सदा शिवाः ।।९
दिवं ब्रूमो नक्षत्राणि भूमिं यक्षाणि पर्वतान् ।
समुद्रा नद्यो वेशान्तास्ते मो मुंचन्त्वंहसः ।।१०
सप्तऋषीन् वा इदं ब्रूमोऽपो देवीः प्रजापतिम् ।
पितॄन् यमश्रेष्ठान ब्रूमस्ते नो मुंचन्त्वंहसः ।।११
ये देवा दिविषदो अन्तरिक्षसदश्च ये ।
पृथिव्यां शक्रा ये श्रितास्ते नो मुंचन्त्वंहसः ।।१२
आदित्या रुद्रा वसवो दिवि देवा अथर्वाणः ।
अंगिरसो मनीषिणस्ते नो मुञ्चन्त्वंहसः ।।१३
यज्ञं ब्रूमो यजमानमृचः सामानि भेषजा ।
यजूंषि होत्रा ब्रूमस्ते नो मुञ्चन्त्वंहसः ।।१४
पञ्च राज्यानि वीरुधां सोमश्रेष्ठानि ब्रूमः ।
दर्भो भङ्गो यव सहस्ते नो मुञ्चन्त्वंहसः ।।१५
अरायान् ब्रूमो रक्षांसि सर्पान् पुण्यजनान् पितॄन् ।
मृत्युनेकशतं ब्रूमस्ते नो मुञ्चन्त्वंहसः ।।१६
ऋतून् ब्रूम ऋतुपतीनार्तवानुत हायनान् ।
समाः सवत्सरान् मासांस्ते नो मुञ्चन्त्वंहसः ।।१७

एत देवा दक्षिणतः पश्चात् प्राञ्च उदेत् ।
पुरस्तादुत्तराच्छक्रा विश्वे देवाः समेत्य ते नो मुञ्चन्त्वंहसः।१८
विश्वान् देवानिदं ब्रूमः सत्यसंधानृतावृधः ।
विश्वाभिः पत्नीभिः सह ते नो मुंचन्त्वंहसः ।१९
सर्वान् देवानिदं ब्रूमः सत्यसंघानृतावृधः ।
सर्वाभिः पत्नीभि सह ते नो मुंचन्त्वंहसः ।।२०
भूतं ब्रूमो भूतपतिं भूतानामुत यो वशी ।
भूतानि सर्वा सङ्गत्य ते नो मुंचनत्वंहसः ।।२१

( अ० ११। ६ )

## विचारों की पवित्रता के लिए

अपवित्र विचार बुरे कार्यों की ओर प्रेरित करते हैं जिनका परिणाम सदैव दुःख और संकट रहता है । अतः सुखी जीवन के लिए विचारों और बुद्धि की पवित्रता की अपेक्षा है । निम्न मन्त्रों के पाठ व हवन से इस कार्य की सिद्धि हो सकती हैः—

पुनन्तु मा देवजनाः मनवो धिया ।
पुनन्तु विश्वा भूतानि पवमानः पुनातु मा ।।१
पवमानः पुनातु मा क्रत्वे दक्षाय जीवसे ।
अथो अरिष्टतातये ।।२
उभाभ्यां देव सवितः पवित्रेण सवेन च ।
अस्मान् पुनीहि चक्षसे ।।३

( अ० ६ । १९ )

## ब्रह्मचर्य की दृढ़ता के लिए

ब्रह्मचारी को निम्न मन्त्रों का नित्य पाठ करना चाहिए । इससे उसे अपार शक्ति की अनुभूति होगी और कामवासना उसका स्पर्श करने का भी साहस न कर पाएगी ।

ब्रह्मचारीण्णंश्चरति रोदसी उभे तस्मिन् देवाः संमनसो भवंति ।
स दाधार पृथिवीं दिवं च स आचार्यं तपसा पिपर्ति ॥१
ब्रह्मचारिण पितरो देवजनाः पृथग् देवा अनुसंयन्ति सर्वे ।
गन्धर्वा एनमन्वायन् त्रयस्त्रिंशत् त्रिशताः षट्सहस्राः
सर्वान्त्स दवांस्तपसा पिपर्ति ॥२
आचार्य उपनयमानो ब्रह्मचारिणं कृणुते गर्भमन्तः ।
तं रात्रीस्तिस्र उदरे बिभर्ति तं जातं द्रुष्टुमभिसंयन्ति देवाः ॥३
इयं समित् पृथिवी द्यौर्द्वितीयोतान्तरिक्षं समिधा पृणाति ।
ब्रह्मचारी समिधां मेखलया श्रमेण लोकांस्तपसा पिपर्ति ॥४
पूर्वो जातो ब्रह्मणो ब्रह्मचारी धर्मं वसानस्तपसोदतिष्ठत् ।
तस्माज्जातं ब्राह्मणं ज्येष्ठं देवाश्च सर्वे अमृतेन साकम् ॥५
ब्रह्मचार्येति समिधा समिद्धः कार्ष्णं वसानो दीक्षितो दीर्घश्मश्रुः ।
स सद्य इति पूर्वस्मादुत्तर समुद्रं लोकान्त्संगृभ्य मुहराचरिक्रत्॥६
ब्रह्मचारी जनयन् ब्रह्मापो लोकं प्रजापतिं परमेष्ठिनं विराजम् ।
गर्भो भूत्वासृतस्य योनाविन्द्रो ह भूत्व.सुरांस्ततर्ह ॥७
आचार्य स्ततक्ष नभसी उभे इमे उर्वी गम्भीरे पृथिवीं दिवं च ।
ते रक्षति तपसा ब्रह्मचारी तस्मिन् देवाः संमनसो भवन्ति ॥८
इमां भूमिं पृथिवीं ब्रह्मचारी भिक्षामा जभार प्रथमो दिवं च ।
ते कृत्वा समिधावुपास्ते तयोरार्पिता भुवनानि विश्वा ॥९
अर्वागन्यः परो अन्यो दिवस्पृष्ठाद् गुहा निधी निहितो ब्राह्मणस्य ।
तौ रक्षति तपसा ब्रह्मचारी तत् केवलं कृणुते ब्रह्म विद्वान् ॥१०
अर्वागन्यः इतो अन्यः पृथिव्या अग्नी समेतो अन्तरेमे ।
तयोः श्रयन्ते रश्मयोऽधि दृढास्ताना तिष्ठति तपसा ब्रह्मचारी ।११
अभिक्रन्दन् स्तनयन्नरुणः शितिंगो बृहच्छेपोऽनु भूमौ जभार ।
ब्रह्मचारी सिंचति सानौ रेतः पृथिव्यां तेन जीवन्ति
प्रदिशश्चतस्रः ॥१२

अग्नौ सूर्ये चन्द्रमसि मातरिश्वन् ब्रह्मचर्यप्सु समिधमा दधाति ।
तासामर्चींषि पृथगभ्रे चरन्ति तासामाज्यं पुरुषो वर्षमापः ॥१३
आचार्यो मृत्युर्वरुणः सोम ओषधयः पयः ।
जीमूता आसन्त्सत्वानस्तैरिदं स्वराभृतम् ॥१४
अमा घृतं कृणुते केवलमाचार्यो ,
भूत्वा वरुणो यद्यदैच्छत् प्रजापतौ ।
तद् ब्रह्मचारी प्रायच्छत् स्वान्मित्रो अध्यात्मनः ॥१५
आचार्यो ब्रह्मचारी ब्रह्मचारी प्रजापतिः ।
प्रजापतिर्वि राजति विराडिन्द्रोऽभवद् वशी ॥१६
ब्रह्मचर्येण तपसा राजा राष्ट्रं वि रक्षति ।
आचार्यो ब्रह्मचर्येण ब्रह्मचारिणमिच्छते ॥१७
ब्रह्मचर्येण कन्या युवानं विन्दते पतिम् ।
अनड्वान् ब्रह्मचर्येणाश्वो घासं जिगीषति ॥१८
ब्रह्मचर्येण तपसा देवा मृत्युमपाघ्नत ।
इन्द्रो ह ब्रह्मचर्येण देवेभ्यः स्वराभरत् ॥१९
ओषधयो भूतभव्यमहोरात्रे वनस्पतिः ।
संवत्सरः सहर्तुभिस्ते जाता ब्रह्मचारिणः ॥२०
पार्थिव दिव्याः पशवः आरण्या ग्राम्याश्च ये ।
अपक्षाः पक्षिणश्च ये ते जाता ब्रह्मचारिणः ॥२१
पृथक् सर्वे प्राजापत्याः प्राणानात्मसु बिभ्रति ।
तान्त्सर्वान् ब्रह्म रक्षति ब्रह्मचारिण्याभृतम् ॥२२
देवानामेतत् परिषूतमनभ्यारूढं चरति रोचमानम् ।
तस्माज्जातं ब्राह्मणं ब्रह्म ज्येष्ठं
देवाश्च सर्वे अमृतेन साकम् ॥२३
ब्रह्मचारी ब्रह्म भ्राजद् बिभर्ति ,
तस्मिन् देवा अधि विश्वे समोताः ।

प्राणापानौ जनयन्नाद् व्यानं वाचं मानो हृदयं ब्रह्म मेधाम् ।२४
चक्षु श्रोत्रं यशो अस्मासु धेह्यन्नं रेतो लोहितमुदरम् ।।२५
तानि कल्पद् ब्रह्मचारी सलिलस्य,
पृष्ठे तपोऽतिष्ठत् तप्यमानः समुद्रे ।
स स्नातो बभ्रुः पिंगलः पृथिव्यां बहु रोचते ।।२६
( अ० ११।५ )

## बौद्धिक विकास के लिए

प्रातःकाल मस्तक को जल से भिगोयें और सूर्योदय की प्रथम किरणें उस पर पड़ने दें। पूर्व की ओर मुख करके बैठें और निम्नमन्त्रों का सस्वर उच्चारण करें। २१ पाठ नित्य करने चाहिये। पाठ के बाद हवन करना चाहिये।

त्वं नो मेधे प्रथमा गोभरश्वेभिरा गहि ।
त्वं सूर्यस्य रश्मिभिस्त्वं नो असि यज्ञिया ।।१
मेधामहं प्रथमा ब्रह्मण्वतीं ब्रह्मजूतामृषिष्टुताम् ।
प्रपीतां ब्रह्मचारिभिर्देवानामवसे हुवे ।।२
यां मेधामृभवो विदुर्यां मेधामसुरा विदुः ।
ऋषयो भद्रां मेधां या विदुस्तां मय्या वेशयामसि ।।३
यामृषयो भूतकृतो मेधाविनो विदुः ।
तया मामद्य मेधयाग्गे मेधाविनं कृणु ।।४
मेधां साय मेधां प्रातर्मेधां मध्यन्दिनं परि ।
मेधां सूर्यस्य रश्मिभिर्वचस वेशयामहे ।।५
( अ० ६।१०७ )

## धार्मिक कार्यों के सफल सम्पादन के लिए

वेदोक्त कर्म में, प्रतिष्ठा और संकल्प में देवाह्वान एवं आशीर्वादात्मक कर्म के सफल सम्पादन और विघ्नों से रक्षा के लिये चावलों को अभिमन्त्रित करके चारों दिशाओं में फैंक दें—

सविता प्रसवानामधिपति सः मावतु ।
अस्मिन् ब्रह्मण्यस्मिन् कर्मन्यस्यां पुरोधायामस्यां
प्रतिष्ठायामस्यां चित्त्यामस्यामाकूत्यामस्यामाशिष्यस्यां
देवहूत्यां स्वाहा ॥१

अग्निर्वनस्पतीनामधिपतिः स मावतु ।
अस्मिन् ब्रह्मण्यस्मिन् कर्मण्स्यां पुरोधायाणस्यां
प्रतिष्ठायामस्यां चित्त्यामस्यामाकूत्यामस्यामाशिष्यस्यां
देवहूत्यां स्वाहा ॥२
द्यावापृथिवी दातृणामधिपत्नी ते मावताम् ।
अस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां पुरोधायामस्यां
प्रतिष्ठायामस्यां चित्त्यामस्यामाकूत्यामस्याशिष्यस्यां
देवहूत्यां स्वाहा ॥३

वरुणोऽपामधिपतिः स मावतु ।
अस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां पुरोधायामस्यां
प्रतिष्ठायामस्यां चित्त्यामस्यामाकूत्य.मस्यामाशिष्यस्यां
देवहूत्यां स्वाहा ॥४
मित्रावरुणौ वृष्ट्याधिपती तौ मावताम् ।
अस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां पुरोधायामस्यां
प्रतिष्ठायामास्यां चित्त्यामस्यामाकूत्यामस्यामाशिष्यस्यां
देवहूत्यां स्वाहा ॥५
मरुतः पर्वतानामधिपतयस्ते मावन्तु ।
अस्मिन् कर्मण्यस्मिन् कर्मयण्स्यां पुरोधायामस्यां
प्रतिष्ठायामस्यां चित्त्यामस्यामाकूत्यामस्यामाशिष्यस्यां
देवहूत्यां स्वाहा ॥६
सोमो वीरुधामाधिपतिः स मावतु ।
अस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां पुरोधायामस्यां

प्रतिष्ठायामास्यां चित्त्यामस्यामाकूत्यामस्याशिष्यस्यां
देवहूत्यां स्वाहा ।।७।।
वायुरन्तरिक्षस्याधिपति. मावतु ।
अस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्मिन् कर्मण्यस्यां पुरोधायामस्यां
प्रतिष्ठायामस्यां चित्यामस्यामाकूत्यामस्यामाशिष्यस्यां
देवहूत्यां स्वाहा ।।८
सर्वश्चक्षुषामधिपतिः स मावतु ।
अस्मिम् ब्रह्मण्यस्मिन् कर्मण्यस्यां पुरोधायामस्यां
प्रतिष्टायामस्यां चित्त्यामस्यामाकूत्यामस्यामाशिष्यस्यां
देवहूत्यां स्वाहा ।।९
चन्द्रमा नक्षत्राणामधिपतिः स मावतु ।
अस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां पुरोधायामस्यां
प्रतिष्ठायामस्यां चित्यामस्यामाकूत्यामस्यामाशिष्यस्यां
देवहूत्यां स्वाहा ।।१०
इन्द्रो दिवोऽधिपतिः स मावतु ।
अस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां पुरोधायामस्यां
प्रतिष्ठायामस्यां चित्यामस्यामाकूत्यामस्याशिष्यस्यां
देवहूत्यां स्वाहा ।।११
मरुतां पिता पशूनामधिपतिः स मावतु ।
अस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां पुरोधायामस्यां
प्रतिष्ठायामस्यां चित्त्यामस्यामाकूत्यामस्यामाशिष्यस्यां
देवहूत्यां स्वाहा ।।१२
मृत्युः प्रजानामधिपतिः स मावतु ।
अस्मिन् ब्रह्मण्यस्मिन कर्मण्यस्यां पुरोधायामस्यां
प्रतिष्ठायामस्यां चित्त्यामस्यामाकूत्यामस्यामाशिष्यस्या ।
देवहूत्यां स्वाहा ।।१३

यमपितृ्णामधिपतिः स मावतु ।
अस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां पुरोधायामस्यां
प्रतिष्ठायामस्यां चित्त्यामस्यामाकूत्यामस्यामाशिष्यस्यां
देवहूत्यां स्वाहा ।।१४
पितर परे ते मावन्तु ।
अस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां पुरोधायामस्यां
प्रतिष्ठायामास्यां चित्त्यामस्यामाकूत्यामस्यामाशिष्यस्यां
देवहूत्यां स्वाहा ।।१५
तता अवरे ते मावन्तु ।
अस्मिन् क्रर्मण्यस्मिन् कर्मयण्स्यां पुरोधायामस्यां
प्रतिष्ठायामस्यां चित्त्यामस्यामाकूत्यामस्यामाशिष्यस्यां
देवहूत्यां स्वाहा ।।१६
ततस्ततामहास्ते मावतु ।
अस्मिन् बृह्मण्यस्मिन् कर्मण्यस्यां पुरोधायामास्यां
प्रतिष्ठायामास्यां चित्त्यामस्यामाकूत्यामस्याशिष्यस्यां
देवहूत्यां स्वाहा ।।७।।

( अ० ५ । २४ )

## तोज वृद्धि के लिये

निम्न मन्त्रों के नित्य सस्वर पाठ व हवन से तेजस्विता की प्राप्ति होती है:—

हस्तिवर्चसं प्रथतां बृहद यशो अदित्या यत् तन्वः सम्बभुव ।
तत् सर्वे समदुर्मह्यमेतद् विश्वे देवा अदितिः सजोषाः ।।१
मितश्च वरुणश्चेन्द्रो रुद्रश्चव चेततु ।
देवासो विश्वधायसस्ते माञ्जन्तु वर्चसा ।।२
येन हस्तौ वर्चसा सम्बभूव येन राजा मनुष्येष्वप्स्वन्तः ।

येन देवा देवतामग्र आयन् तेन ,
मामद्य वचसाग्ने वर्चस्विनं कृणु ।।३
यत् ते वर्चो जातवेदो बृहद् भवत्याहुतेः ।
यावत् सूर्यस्य वर्च आसुरस्य च हस्तिनः ।
तावन्मे अश्विना वर्च आ धत्तां पुस्करस्रजा ।।४
यावच्चतस्रः प्रदिशश्चक्षुर्यावत् समश्नुते ।
तावत् समत्विन्द्रियं मयि तद्धस्तिवर्चसम् ।।५
हस्ती मृगाणां सुषादामतिष्ठावान् बभूव हि ।
तस्य भगेन वर्चसाऽभि षिञ्चामि मामहम् ।।६
( अ० ३ । २२ )

## विवाद निवृत्ति के लिए

जब दो पक्षों में विवाद इस सीमा तक बढ़ गया हो कि किसी बड़े विस्फोट की आशंका हो, आपसी विद्वेष भाव को दूर करना हो, पुत्र पिता, पति पत्नी, भाई भाई, बहिन भाई में अनबन हो गई हो तो निम्न मन्त्रों की पाठ व हवन साधना दोनों पक्षों को प्रेम सूत्र में बांधती है और समान मन वाला बनाती है:—

सहृदयं सांमनस्यमविद्वेषं कृणोमि वः ।
अन्यो अन्यमभि हर्यंत वत्सं जातमिवाघ्न्या ।।१
अनुव्रतः पितुः पुत्रो माता भवतु सँमनाः ।
जाया पत्ये मधुमतीं वाचं वदतु शन्तिवाम् ।।२
मा भ्राता भ्रातरं द्विक्षन्मा स्वसारमुत स्वसा ।
सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया ।।३
येन देवा न वियन्ति नो च विद्विषते मिथः ।
तत् कृन्मो ब्रह्म वो गृहे सं ज्ञानं पुरुषेभ्यः ।।४
ज्यायस्वन्ताश्चित्तिनो मा वि यौष्ट संराधयन्तः सधुराश्चरन्तः ।

अन्यौ अन्यस्मै वल्गु वदन्त एत ,
सध्रीचीनान् वः संमनसस्कृणोमि ।।५
समानी प्रपा सह वोऽन्नभागः समाये योक्त्रे सह वो युनज्मि ।
सम्यञ्चोऽग्निं सपर्यतारा नाभिमिवाभितः ।।६
सध्रीचीनान् वः संमनसस्कृणोम्येकश्नुष्ठीन्त्स वननेन् सर्वान् ।
देवाइवामृत रक्षमाणाः सायंप्रातः सौमनसो वो अस्तु ।।७
( अ० ३ । ३० )

## यश प्राप्ति के लिए

निम्नमन्त्रों की जप व हवन साधना से साधक की गतिविधियां इस प्रकार से सञ्चालित होने लगती हैं जिससे उसका यश व कीर्ति चारों ओर फैलने लगे—

गिरावरगराटेषु हिरण्ये गोषु यद् यशः ।
सुरायां सिच्यमानायां कीलाले मधु तन्मयि ।।१
अश्विना सारघेण मा मधुनाङ्क्तं शुभस्पती ।
यथा भर्गस्यतीं वाचमावदानि जनाँ अनु ।।२
मयि वर्चो अथो यशोऽथो यज्ञस्य यत् पयः ।
तन्मयि प्रजापतिर्दिवि द्यामिव दृंहतु ।।३
( अ० ६ । ६९ )

## काम नियन्त्रण के लिये

जिस व्यक्ति के मस्तिष्क पर काम का नियन्त्रण हो, उसके शारीरिक, बौद्धिक, मानसिक व आत्मिक स्वास्थ्य का निश्चित रूप से विध्वंस होता है । जीवन विकास के लिये आवश्यक है कि काम को नियन्त्रित किया जाये । यह निम्न मन्त्रों से सम्पन्न होता है—

नि शीर्षतो नि पत्तत आध्यो नि तिरामि ते ।
देवाः प्र हिणुत स्मरमसौ मामनु शोचतु ।।१

अनुमतेऽविदं मन्यस्वाकूते समिदं नमः ।
देवाः प्र हिणुत स्मरमसौ मामनु शोचतु ।।२
( अ० ६ । १३१ )

यं देवाः स्मरमसिञ्चन्नप्स्वन्तः शोशुचानं सहाध्या ।
तं ते तपामि वरुणभ्य धर्मणा ।।१
यं विश्वे देवाः स्मरमसिञ्चन्नप्स्वन्तः शोशुचानं सहाध्या ।
तं ते तपामि वरुणस्य धर्मणा ।।२
यमिन्द्राणी स्मरमसिञ्चदप्स्वन्तः शोशुचानं सहाध्या ।
तं ते तपापि वरुणस्य धर्मणा ।।३
यमिन्द्राग्नी स्मरमसिञ्चतामप्स्वन्तः शोशुचानं सहाध्या ।
तं ते तपामि वरुणस्य धर्मणा ।।४
यं मित्रावरुणौ स्मरमसिञ्चतामप्स्वन्तः शोशुचानं सहाध्या ।
तं ते तपामि वरुणस्य धर्मणा ।।५
( अ० ६ । १३२ )

## विघ्न नाश के लिये

अरलु वृक्ष की मणि बनाकर पीले रङ्ग के डोरे में कवच के समान गले अथवा भुजा में धारण करें। मणि को निम्न मन्त्रों से अभिमन्त्रित करें। इससे सभी प्रकार के विघ्नों का नाश होता है।

कर्शफस्य विशफस्य द्यौष्पिता पृथिवी माता ।
यथाभिचक्र देवास्तथाप कृणुता पुनः ।।१
अश्लेष्माणो अधारयन् तथा तन्मनुना कृतम् ।
कृणोमि वध्रि विष्कन्धं मुष्कावर्हो गवामिव ।।२
पिशगे सूत्रे खृगलं तदा वध्नन्ति वेधसः ।
श्रवस्युं शुष्मं काववं वध्रि कृण्वन्तु बन्धुरः ।।३
येना श्रवस्यवश्चरथ देवा इवासुरमायया ।
शुनां कपिरिव दूषणो बन्धुरा काववस्य ।।४

दुष्ट्यै हि त्वा भत्स्यामि दूषयिष्यामि काबवम् ।
उदाशवो रथाइव शपथेभिः सरिष्यथ ।।५
एकशतं विष्कन्धानि विष्ठिता पृथिवीमनु ।
तेषां त्वामग्र उज्जहरुर्मणि विष्कन्धदूषणम् ।।६
( अ० ३ । ९ )

## शत्रु भय से रक्षा के लिये

[ १ ]

'पुरुष वृक्ष' पीपल और गायत्री सारोत्पन्न अत्यन्त बली खदिर वृक्ष के संयोग से निर्मित "अश्वत्थमणि" को निम्न मन्त्रों से अभिमन्त्रित करके धारण करने पर शत्रुओं के मानसिक भावों में परिवर्तन होता है । वह बदला लेने के बजाय मैत्री और समझौते की बात सोचते हैं—

पुमान् पुंसः परिजातोऽश्वत्थः खदिरादधि ।
स हन्तु शत्रून् मामकान् यानहं द्वेष्मि ये च माम् ।।१
तानश्वत्थ निः शृणीहि शत्रून् वैबाध दोधतः ।
इन्द्रेण वृत्रघ्ना मेदी मित्रेण वरुणेन च ।।२
यथाश्वत्थ निरभनोऽतर्महत्यर्णवे ।
एवा तान्त्सर्वान्निर्भङ्ग्धि यानहं द्वेष्मि ये च माम् ।।३
यः सहमानश्चरसि सासहानइव ऋषभः ।
तेनाश्वत्थ त्वया वयं सपत्नान्त्सहिषीमहि ।।४
सिनात्वेनान् निर्ऋतिर्मृत्योः पाशैरमोक्यैः ।
अश्वत्थ शत्रून् मामकान् यानहं च माम् ।।५
यथाश्वथ वानस्पत्यानारोहन् कृणुषेऽधरान् ।
एवा मे शत्रोर्मूर्धानं विष्वग् भिन्द्धि सहस्व च ।।६
तेऽधराञ्चः प्र प्लव तां छिन्ना नौरिव बन्धनात् ।
न वैबाधप्रणुत्तानां पुनरस्ति निवर्त्तनम् ।।७

प्रैणान् नुदे मनसा प्र चित्तेनोत ब्रह्मणा ।
प्रैणान् वृक्षस्य शाखायाश्वत्थस्य नुदामहे ।।८
( अ० ३ । ६ )

[ २ ]

जिन शक्तिशाली शत्रुओं से हानि की आशंका हो और निरन्तर भय बना रहता हो, उन्हें वशीभूत करने के लिये निम्न मन्त्रों का प्रयोग लाभदायक रहता है । प्रयोग करते समय यह भावना करें कि वह शत्रु हाथ जोड़े मैत्री की भिक्षा माँग रहा है और क्षमा याचना के लिये आतुर है—

तन्त्सत्यौजाः प्र दहत्वग्निर्वैश्वानरो वृषा ।
यो नो दुरस्याद् दिप्साच्चाथ यो नो अरातियात् ।।१
यो नो दिप्सदप्सतो दिप्सतो यश्च दिप्सति ।
वैश्वानरस्य दंष्ट्रयोरग्नेरपि दधामि तम् ।।२
य आगरे मृगयन्ते प्रतिक्रोशेऽमावास्ये ।
क्रव्यादो अन्यान् दिप्सतः सर्वा स्त्सान्त्सहसा सहे ।।३
सहे पिशाचान्त्सहसैषां द्रविणं ददे ।
सर्वान् दुरस्यतो हन्मि सं म आकूतिर्ऋध्यताम् ।।४
ये देवास्तेन हासन्ते सूर्येण मिमते जवम् ।
नदीषु पर्वतेषु ये सं तैः पशुभिर्विदे ।।५
तपनो अस्मि पिशाचानां व्याघ्रो गोमतामिव ।
श्वानः सिंहमिव दृष्ट्वा ते न विन्दन्ते न्यञ्चनम् ।।६
न पिशाचैः सं शक्नोमि न स्तेनैर्न वनर्गुभिः ।
पिशाचास्तस्मान्नश्यन्ति यमहं ग्राममाविशे ।।७
यं ग्राममाविशत इदमुग्रं सहो मम ।
पिशाचास्तस्मान्नश्यन्ति न पापमुप जानते ।।८
ये मा क्रोधयन्ति लपिता हस्तिन मशकाइव ।

तानहं मन्ये दुर्हिताञ्जने अल्पशयूनिव ॥६
अभि तं निर्ऋर्धत्तामश्वमिवाश्वाभिधान्या ।
मल्वो यो मह्यं क्रुध्यति स उ पाशान्न मुच्यते ॥१०
( अ० ४ । ३५ )

अव मन्युरवायताव बाहू मनोयुजा ।
पराशर त्वं तेषां पराञ्चं शुष्ममर्दयाधा नो रयिमा कृधि।१
निर्हस्तेभ्यो नैर्हस्तं यं देवाः शरुमस्यथ ।
वृश्चामि शत्रूणां बाहूननेन हविषाहम् ॥२
इन्द्रश्चकार प्रथमं नैर्हस्तसुरेभ्यः ।
जयन्तु सत्वानो मम स्थिरेणेंद्रेण मेदिना ॥३
( अ० ६ । ६५ )

निर्हस्तः शत्रूरभिदासन्नस्तु येसेनाभिर्युधमायन्त्यस्मान् ।
समर्पयेन्द्र महता वधेन द्रात्वेषामघहारो विविद्धः ॥१
आतन्वाना आयच्छन्तोऽस्यन्तो ये च धावथ ।
निर्हस्ताः शत्रवः स्थनेद्रो वोऽद्य पराशरीत् ॥२
निर्हस्ताः सन्तु शत्रवोऽङ्गैषां म्लापयामसि ।
अथैषामिंद्र वेदांसि शतशो वि भजामहै ॥ ३
( अ० ६ । ६६ )

[ ३ ]

तिलक वृक्ष की मणि को निम्न मन्त्रों से अभिमन्त्रित करने पर भुजा पर धारण करें तो शत्रु भय से रक्षा होती है, शत्रु वशीभूत होता है, कृत्या अपने प्रयोग कर्ता पर ही आक्रमण करती है। इसके धारण कर्ता को देखते ही शत्रु पलायन करते हैं। इस मणि को शत्रु के उत्पीड़न, शरीर रक्षण और बल के लिये धारण करना चाहिये। यह कवच रूप में रक्षक सिद्ध होती है और वृद्धावस्था तक जीवित रहने की क्षमता देती है।

अयं प्रतिसरो मणिर्वीरो वीराय बध्यते ।
वीर्यवान्त्सपत्नहा शूरवीरः परिपाणः सुमङ्गलः ।।१
अयं मणिः सपत्नहा सुवीरः सहस्वान् वाजी सहमान उग्रः ।
प्रत्यक् कृत्या दूषयन्नेति वीरः ।।२
अनेनेन्द्रो मणिना वृत्रमहन्ननेनासुरान् पराभावयन्मनीषी ।
अनेनाजयद् द्यावापृथिवी उभे इमे अनेनाजयत् प्रदिशश्चतस्रः ।।३
अयं स्राक्त्यो मणिः प्रतीवर्तः प्रतिसरः ।
ओजस्वान् विमृधो वशी सो अस्मान् पातु सर्वतः ।।४
तदग्निराह तदु सोम आह बृहस्पतिः सविता तदिन्द्रः ।
ते मे देवाः पुरोहिताः प्रतीचीः कृत्याः प्रतिसरैरजन्तु ।।५
अन्तर्दधे द्यावापृथिवी उताहरुत सूर्यम् ।
ते मे देवाः पुरोहिताः प्रतीचीः कृत्याः प्रतिसरैरजन्तु ।।६
ये स्राक्त्यं मणिं जना वर्माणि कृण्वते ।
सूर्य इव दिवमारुह्य वि कृत्या बाधते वशी ।।७
स्राक्त्येन मणिन ऋषिणेव मनीषिणा ।
अजैषं सर्वाः पृतना वि मृधो हन्मि रक्षसः ।।८
याः कृत्या आङ्गिरसीर्याः कृत्या आसुरीर्याः कृत्याः ।
स्वयंकृता या उ चान्येभिराभृताः ।
उभयीस्ता परा यन्तु परावतो नवतिं नाव्या अति ।।९
अस्मै मणिं वर्म बध्नन्तु देवा इन्द्रो विष्णुः सविता रुद्रो अग्निः ।
प्रजापतिः परमेष्ठी विराड् वैश्वानर ऋषयश्च सर्वे ।।१०
उत्तमो अस्योषधीनामनड्वाञ्जगतामिव व्याघ्रः श्वपदामिव ;
यमैच्छामाविदाम तं प्रतिस्पाशनमन्तितम् ।।११
स इद् व्याघ्रो भवत्यथो सिंहो अथो वृषा ।
अथो सपत्नकर्शनो यो बिभर्तीमं मणिम् ।।१२
नैनं घ्नन्त्यप्सरसो न गन्धर्वा न मर्त्याः ।

सर्वा दिशो वि राजति यो बिभर्तीमं मणिम् ॥ ।३
कश्यपस्त्वामसृजत कश्यपस्त्वा समैरयत ।
अबिभस्त्वेन्द्रो मानुषे बिभ्रत् संश्रेषिणेऽजयत् ।
मणिं सहस्रवीर्यं वर्म देवा अकृण्वत ॥१४
यस्त्वा कृत्याभिर्यस्त्वा दीक्षाभिर्यज्ञैस्त्वा जिघांसति ।
प्रत्यक् त्वमिन्द्र तं जहि वज्रेण शतपर्वणा ॥१५
अयमिद् वै प्रतीवर्त ओस्वनात्संजयोमणिः ।
प्रजां धनं च रक्षतु परिपाणः सुमङ्गलः ॥१६
असपत्नं नो अधरादसपत्नं न उत्तरात् ।
इन्द्रासपत्नं नः पश्चाज्ज्योतिः शूर पुरस्कृधि ॥१७
वर्म मे द्यावापृथिवी वर्माहर्वर्म सूर्यः ।
वर्म मे इन्द्रश्चाग्निश्च वर्म धाता दधातु मे ॥१८
ऐन्द्राग्नं वर्म बहुलं यदुग्रं धिश्वे देवा नाति विध्यन्ति सर्वे ।
तन्मे तन्वं त्रायतां सर्वतो बृहदायुष्माञ्जरदष्टिर्यथासानि ॥१९
आ मारुक्षद् देवमणिर्मह्या अरिष्टतातये ।
इमं मेथिमभिसंविशध्वं तनूपानं त्रिवरूथमोजसे ॥२०
अस्मिन्निन्द्रो वि दधातु नृम्णमिमं देवासो अभिसंविशध्वम् ।
दीर्घायुत्वाय शतशारदायायुष्माञ्जरदष्टिर्यथासत् ॥२१
स्वस्तिदा विशां पतिर्वृत्रहा विमृधो वशी ।
इन्द्रो बध्नातु ते मणिं जिगीवाँ अपराजितः
सोमपा अभयंकरो वृषा ।
स त्वा रक्षतु सर्वतो दिवा नक्तं च विश्वतः ॥२२

( अ० ८।५ )

## रक्षा के लिए

निम्न मन्त्रों का दैनिक दैनिक पाठ रक्षा कवच के रूप में सिद्ध

होता है। शत्रु पक्ष से किसी प्रकार के आक्रमण की सम्भावना हो तो इनके ११ पाठ नित्य करके हवन करना चाहिये।

अग्निर्मा पातु वसुभिः पुरस्तात् तस्मिन् क्रमे तस्मिञ्छ्रये तां पुर प्रैमि। स मा रक्षतु मा गोपायतु तस्मा आत्मान परिददे स्वाहा ॥१

वायुर्मान्तरिक्षेणैतस्या दिशः पातु तस्मिन् क्रमे तस्मिञ्छये तां पुर प्रैमि। स मा रक्षतु स मा गोपायतु यस्मा आत्मानं परिददे स्वाहा ॥२

सोमो मा रुद्रैर्दक्षिणाया दिशः पातु तस्मिन् क्रमे तस्मिञ्छये तां पुरं प्रैमि। स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परिददे स्वाहा ॥३

वरुणो मादित्यै रेतस्य दिशः पातु तस्मिन् क्रमे तस्मिञ्छ्रये तां पुर प्रैमि। स मा रक्षतु स मा गोपायतु तस्माआत्मानं परिददे स्वाहा ॥४

सूर्यो मा द्यावापृथिवीभ्यां प्रतीच्या दिशः पातु तस्मिन् क्रमे तस्मिञ्छये तां पुर प्रैमि। स मा चक्षतु स मा गोपायतु तस्मा आत्मानं परिददे स्वाहा ॥५

आपो मौषधीमतीरेतस्या दिश पान्तु तासु क्रमे तासु श्रये ताँ पुरं प्रैमि। स मा रक्षन्तु ता मा गोपायन्तु ताभ्य आत्मानं परिददे स्वाहा ॥६

विश्वकर्मा म सप्तऋषिभिरुदीच्या निशः पातु तस्मिन् क्रमे तस्मि ञ्छ्रये तां पुरं प्रैमि। स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परिददे स्वाहा ॥७

इन्द्रो मा मरुत्वानेतस्या दिशः पातु तस्मिन्न् क्रमे तस्मिञ्छ्रये

तां पुरं प्रैमि । सं मा रक्षतु स मा गोपायतु तस्मा आत्मानं परिददे स्वाहा ॥८

प्रजापतिर्मा प्रजननवात्न्सह प्रतिष्ठाया ध्रुवाया दिशः पातु तस्मिन् क्रमे यस्मिञ्छ्र्ये तां पुरं प्रैमि । समा रक्षतु स मा गोपायतुतस्मा आत्मानं परि ददे स्वाहा ॥९

बृहस्पतिर्मा विश्वैदेवैरूर्ध्यावा दिशः पातु यस्मिन् क्रमे तस्मिञ्छ्ये तां पुरं प्रैमि । सं मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा ॥१०

( अ० १९ । १७ )

गोभिष्ट्वा पात्वृषभो वृषा स्वा पातु वाजिभिः ।
वायुष्ट्वा ब्रह्मणा पात्विन्द्रस्त्वा पात्विन्द्रियैः ॥१
सोमस्त्वोषधोभिर्नक्षत्रै पातु सूर्यः ।
माद्भयस्त्वा चन्द्रो वृत्रहा वातः प्राणन रक्षतु ॥२
तिस्त्रोदिवस्तिस्रः पृथिवीस्त्रोण्यन्तरिक्षाणि चतुरः समुद्रान् ।
विवृतं स्तोमं त्रिवृत आप आहस्तास्त्वा रक्षन्तु त्रिवृता त्रिवद्भिः ॥३
त्रीन्नाकां स्त्रीन् समुदास्त्रीन् वैष्टपान् ।
त्रीन् मातरिवनस्त्रीन्त्सूर्यान् गोपतृन् कल्पयामि ते ॥४

( अ० १९ । २६ )

## मृत्यु से रक्षा के लिए :

प्राचीन काल में भारतीय अपनी पूर्ण आयु १०० वर्ष की मानते थे । यदि इससे पहले मृत्यु हो जाये तो इसे अशुभ मानते थे और पूर्व जन्म के किन्हीं पापों का परिणाम समझते थे । पूर्व जन्म के असंस्कृत कर्मों को संस्कृत व परिष्कृत करने से ही मृत्यु और उसके भय से रक्षा की जा सकती है जिसके लिये निम्न मन्त्र उपयुक्त हैं—

[ १ ]

यमोदनं प्रथमजा ऋतस्य प्रजापतिस्तपसा ब्रह्मणेऽपचत् ।
यो लोकानां विधृतिर्नाभिरेषात् तेनौदनेनाति तराणि मृत्युम् ॥१
येनातरन् भूतकृतोऽति मृत्युं यमन्वविन्दन् तपसा श्रमेण ।
यं पपाच ब्रह्मणे ब्रह्म पूर्वं तेनौदनेनाति तराणि मृत्युम् ॥२
यो दाधार पृथिवीं विश्वभोजसं यो अन्तरिक्षमापृणाद् रसेन ।
यो अस्तभ्नाद् दिवमूर्ध्वो महिम्ना तेनौदनेनाति तराणि मृत्युम्॥३
यस्मान्मासा निर्मितास्त्रिंशदराः,
संवत्सरो यस्मान्निर्मितो द्वादशारः ।
अहोरात्रा यं परियंतो नापुस्तेनौदनेनाति तराणि मृत्युम् ॥४
यः प्राणदः प्राणदवान् बभूव यस्मै लोका घृतवंतः क्षरंति ।
ज्योतिष्मतीः प्रदिशो यस्य सर्वास्तेनौदनेनाति तराणि मृत्युम् ॥५
यस्मात् पक्वादमृतं सम्बभूव यो गायत्र्या अधिपतिर्बभूव ।
यस्मिन् वेदा निहिता विश्वरूपास्तेनौदनेनाति तराणि मृत्युम् ॥६
अव बाधे द्विषन्तं देवपीयुं सपत्ना ये मेऽप ते भवन्तु ।
ब्रह्मौदनं विश्वजितं पचामि शृण्वन्तु मे श्रद्दधानस्य देवाः ॥७
( अ० ४ । ३५ )

[ २ ]

पुरस्ताद् युक्तो वह जातवेदोऽग्ने विद्धि क्रियमाणं यथेदम् ।
त्वं भिषग् भेषजस्यासि कर्ता त्वया गामश्वं पुरुष सनेम ॥१
तथा तदग्ने कृणु जातवेदो विश्वेभिर्देवैः सह सम्विदानः ।
यो नो दिदेव यतमो जघास यथा सो अस्य परिधिष्पताति ॥२
यथा सो अस्य परिधिष्पताति तथा तदग्ने कृणु जातवेदः ।
विश्वेभिर्देवैः सह सम्विदानः ॥३
अक्ष्यौनि विध्य हृदयं नि विध्य जिह्वां नि तृन्द्धि प्र दतो मृणीहि ।
पिशाचो अस्य यतमो जघासग्ने यविष्ठ प्रति तं शृणीहि ॥४

यदस्य हृतं विहृतं यत् पराभृतमात्मनो जग्धं यतमत् पिचाचैः ।
तदग्ने विद्वान् पुनरा भर त्वं शरीरे मांसमसुमेरयामः ।।५
आमे सुपक्वे शवले पिवक्वे यो मा पिशाचो अशने ददम्भ ।
तदात्मना प्रजया पिशाचा वि यातयन्तामगदोयमस्तु ।।६
क्षीरे मा मन्थे यतमो ददम्भाकृष्टपच्ये अशने धान्ये यः ।
तदात्मना प्रजया पिशाचा वि यातयन्तामगदोमस्तु ।।७
अपां मा पाने यतमो ददम्भ क्रव्याद् यातूनां शयने शयानम् ।
तदात्मना प्रजया पिशाचा वि यातयन्तामदोयमस्तु ।।८
दिवा मा नक्तं यतमो ददम्भ क्रव्याद् यातूनां शयने शयानम् ।
तदात्मना प्रजया पिशाचा वि यातयन्तामगददोयमस्तु ।।९
क्रव्यादमग्ने रुधिरं पिशाचं मनोहनं जहि जातवेदः ।
तमिन्द्रो वाजी वज्रेण हन्तु च्छिनत्तु
सोमः शिरो अस्य धृष्णुः ।।१०

( अ० ५ । २९ )

## चोर व हिंसक पशुओं से सुरक्षा के लिए :

किसी निर्जन स्थान में चोर, डाकू, व्याघ्र, भेड़िया, जङ्गली कुत्ता व सर्प आदि का भय हो तो निम्न मन्त्रों का उच्चारण करें और भावना करें कि वह हमारे मार्ग को छोड़कर दूर भाग रहे हैं—

उदितस्त्रयो आक्रमन् व्याघ्रः पुरुषो वृकः ।
हिरुग्धि यन्ति सिन्धवो हिरुम् देवो
वनस्पतिर्हिरुङ् नमन्तु शत्रवः ।। १
परेणैतु पथा वृकः परमेणोत तस्करः ।
परेण दत्वती रज्जुः परेणाघायुरर्षतु ।।२
अक्ष्यो च ते मुखं च ते व्याघ्र जम्भयामसि ।
आत् सर्वान् विंशतिं नखान् ।।३

व्याघ्रं दत्वतां वयं प्रथमं जम्भयामसि ।
आदु ष्टेनमथो अहिं यातुधानमथो कमृत्रकम् ॥४
यो अद्य स्तेन आयति स संपिष्टो अपायति ।
पथामपध्वसेमैत्विन्द्रो वज्रेण हन्तु तम् ॥५
मूर्णा मृगस्य दन्ता अपिशीर्णा उ पृष्टयः ।
निम्रुक् ते गोधा भवतु नीचायच्छशयुर्मृगः ॥६
यत् संयमो न वियमो वियमो यन्न संयमः ।
इन्द्रजाः सोमजा आथर्वणमसि व्याघ्रजम्भनम् ॥७
( अ० ४ । ३ )

## वशीकरण मंत्र :

[ १ ]

पत्नी यदि निम्न मन्त्र से अभिमन्त्रित वस्त्र धारण करती है तो उसका पति उसकी ओर आकर्षित होता है और वह किसी अन्य स्त्री का ध्यान नहीं करता—

अभि त्वा मनुजातेन दधामि मम वाससा ।
यथासो मम केवलो नान्यासां कीर्तयाश्चन ॥१
( अ० ६ । ३७ )

[ २ ]

शंखपुष्पी नामक औषधि को निम्न मन्त्रों से अभिमन्त्रित करके यदि पत्नी सेवन करती है तो उसका पति उसकी ओर आकृष्ट होता है। पति के किसी अन्य स्त्री के साथ बढ़ रहे वासनात्मक सम्बन्ध समाप्त हो जायेंगे।

इदं खनामि भेषजं मांपश्यमभिरोरुदम् ।
परायतो निवर्तनमायतः प्रतिनन्दनम् ॥१
येना निचक्र आसुरीन्द्रं देवेभ्यस्परि ।
तेना नि कुर्वे त्वामहं यथा तेऽसानि सुप्रिया ॥२

प्रतीची सोममसि प्रतीच्युत सूर्यम् ।
प्रतीची विश्वान् देवान् तां त्वाच्छावदामसि ॥३
अहं वदामि नेत् त्वं सभायामह त्वं वद ।
ममेदसस्त्वं केवलो नान्यासां कीर्तयाश्चन ॥४
यदि वासि तिरोजनं यदि वा नद्य स्तिरः ।
इयं ह मह्यं त्वामोषधिर्बद्ध्वेव न्यानयत् ॥५
(अ० ७ । ३८)

## कृत्या के प्रतिकार के लिए :

किसी शत्रु ने हानि पहुँचाने के लिए यदि कृत्या का प्रयोग किया हो तो उससे रक्षा के लिए निम्न मन्त्रों का प्रयोग करना चाहिए। इनका यह भी प्रभाव होता है कि वह कृत्या लौटकर प्रयोगकर्त्ता पर आक्रमण करके उसका नाश करदे ।

सुपर्णस्त्वान्वविन्दत् सूकरस्त्वाखनन्नसा ।
दिप्सौषधे त्वं दिप्सन्तमव कृत्याकृतं जहि ॥१
अव जहि यातुधानानव कृत्याकृत जहि ।
अथो यो अस्मान् दिप्सति तम त्वं जह्यौषधे ॥२
रिश्यस्येव परीशास परिकृत्य परि त्वचः ।
कृत्या कृत्याकृते देवा निष्कमिव प्रति मुञ्चत ॥३
पुनः कृत्यां कृत्याकृते हस्तगृह्य पराणय ।
समक्षयस्मा आ धेहि कृत्याकृतं हनत् ॥४
कृत्याः सन्तु कृत्याकृते शपथः शपथीयते ।
सुखो रथइव वर्तंतां कृत्या कृत्याकृतं पुनः ॥५
यदि स्त्री यदि वा पुमान् कृत्यां चकार पाप्मने ।
तामु तस्मै नयामस्यश्वमिवाश्वाभिधान्या ॥६
यदि वासि देवकृता यदि वा पुरुषैः कता ।
तां त्वा पुनर्णयामसीन्द्रेण सयुजा वयम् ॥७

अग्ने पृतनाषाट् पृतनाः सहस्व ।
पुनः कृत्यां कृत्याकृते प्रतिहरणेन हरामसि ॥८
कतव्यधनि विध्य तं यश्चकार तमिज्जहि ।
न त्वामचक्रुषे वयं वधाय सं शिशीमहि ॥९
पुत्रइव पितरं गच्छ स्वजइवाभिष्ठितो दश ।
वन्धमिवावक्रामी गच्छ कृत्ये कृत्याकृतं पुनः ॥१०
उदेणीव वारण्य भिस्कन्दं मृगोव ।
कृत्या कर्तारपृच्छतु ॥११
इष्वा ऋजीयः पततु द्यावापृथिवी तं प्रति ।
सा तं मृगमिव गृह्णातु कृत्याकृतं पुन. ॥१२
अग्निरिवैतु प्रतिकूलमनुकूलमिवोदकम् ।
सुखो रथइव वर्ततां कृत्या कृत्याकृत पुनः ॥१३
( अ० ५ । १४ )

यां ते चक्रामे पात्रे यां चक्रुर्मिश्रधान्ये ।
आमे मांसे कृत्यां यां चक्रुः पुनः प्रति हरामि ताम् ॥१
यां ते चक्रुः कृकवाकावजे वा यां कुरीरिणि ।
अव्यां ते कृत्यां यां चक्रुः पुनः प्रति हरामि ताम् ॥२
यां ते चक्रु रेकशफे पशूनामुभयादति ।
गर्दभे कृत्यां यां चक्रुः पुनः प्रति हरामि ताम् ॥३
यां ते चक्रु रमूलाया वलगं वा नराच्याम् ।
क्षेत्रे ते कृत्या या चक्रुः पुनः प्रति हरामि ताम् ॥४
या ते चक्रुर्गार्हपत्ये पुर्वाग्नावुत दुश्चितः ।
शालाया कृत्या यां चक्रु पुनः प्रति हरामि ताम् ॥५
यां ते चक्रुः सभायां यां चक्रुरधिदेवने ।
अक्षेषु कृत्यां यां चक्रुः पुनः प्रति हरामि ताम् ॥६
यां ते चक्रुः सेनायां यां चक्रुरिष्वायुधे ।

दुन्दुभौ कृत्यां यां चक्रुः पुन प्रति हरामि ताम् ।।७
यां ते कृत्यां कूतेऽवदधु श्मशानो वा निचख्नुः ।
सद्मनि कृत्यां यां चक्रुः पुनः प्रति हरामि ताम् ।।८
यां ते चक्रुः पुरुषास्थे अग्नौ संक्रसुके च याम् ।
म्रोकं निर्दाहं क्रव्यादं पुनः प्रति हरामि ताम् ।।९
अपथेना जभारैणां तां पथेतः प्र हिण्मसि ।
अधीरो मर्याधीरेभ्यः सं जभावाचित्या ।।१०
यश्चकार न शशाक कर्तुं शश्रे पादमङ्गुरिम् ।
चकार भद्रमस्मभ्यमभगो भगवद्भ्यः ।।११
कृत्याकृतं वलगिनं मूलिनं शपथेय्यम् ।
इन्द्रस्तं हन्तु महता वधेनाग्निर्विध्यत्वस्तया ।।१२
( अ० ५ । ३१ )

यां कल्पयन्ति वहतौ वधूमिव विश्वरूपां हस्तकृतां चिकित्सवः ।
सारादेत्वप नुदाम एनाम् ।।१
शीर्षण्वती नस्वती कर्णिनी कृत्याकृता संभृता विश्वरूपा ।
सारादेत्वप नुदाम एनाम् ।।२
शूद्र कृता राजकृता स्त्रीकृता ब्रह्मभिः कृता ।
जाया पत्या नुत व कर्तारं बन्ध्वृच्छतु ।।३
जनयाहमोषध्या सर्वाः कृत्या अदूदुषम् ।
यां क्षेत्रे चक्रुर्यां गोषु यां वा ते पुरुषेषु ।।४
अघमस्त्वघकुते शपथः शपथीयते ।
प्रत्यक् प्रतिप्रहिण्मो यथा कृत्याकृतं हनत् ।।५
प्रतीचीन आङ्गिरसोऽध्यक्षो नः पुरोहितः ।
प्रतीचीः कृत्या आकृत्यामून् कृत्याकृतो जहि ।।६
यस्त्वोवाच परेहीति प्रतिकूलमुदाय्यम् ।
तं कृत्येऽभिनिवतस्व मास्मानिच्छो अनागसः ।।७

